एकदा दीक्षितः श्रीमानुच्चग्रामं समास्थितः ।
देहकुण्डसमीपस्थ अटोराख्ये गिरौ वरे ॥९३॥
गोदोहनं प्रकुर्वंतं गोपपुत्रं ददर्शह ।
काचिद्गोपी च तरुणी वत्सं जग्राह यत्नतः ॥९४॥
गोदोहनकरो गोपस्तामुवाच हसन्निह ।
नागमिष्याम्यहं प्रातः गोदोहनकृते तत्र ॥९५॥
प्रतिज्ञातं न मे दत्तं त्वया भामिनि किंचन ।
सा च गोपी तदा प्राह दास्ये सर्वं न संशयः ॥९६॥
सायं मे गृहमागच्छ दास्ये त्वां नवनीतकम् ।
मिश्रिकामिश्रितं दिव्यं प्रतिज्ञातं हि यच्च तत् ॥९७॥
तच्छ्रुत्वा प्रहसन् गोपः किशोरो गतवांस्ततः ।
सा च गोपी गता तद्वद् दुग्धमादाय वै गृहम् ॥९८॥
श्रीनारायणभट्टश्च ध्यानस्तिमितलोचनः ।
ललितां गोपिकां तां च गोपं कृष्णं ददर्शह ॥९९॥
एकदा गोपिकारूपं कृत्वा नारायणो मुनिः ।
कालिन्द्या निकटे स्थानं वृन्दारण्ये जगामह ॥१००॥
यत्रैव भगवान् कृष्णो रासलीलां करोति हि ।
पुंसा नैव गतिर्यत्र पुंभावेन कथंचनः ॥१०१॥

---

एक समय देहकुण्ड के पास अटोरागिरि पर गोदोहन करता हुआ एक गोपबालक को आपने देखा । आपने और भी किसी गोपी को बछड़ा पकड़ती हुई खड़ी देखा । गोपबालक ने हँसकर कहा-मैं कल नहीं आऊँगा । तुमने जो कहा था सो नहीं दिया । गोपी ने कहा-नहीं नहीं, तुम सन्ध्या को हमारे घर पर अवश्य आय जाना । मैं मिश्री-मक्खन अवश्य देऊँगी । बालक तो अन्तर्द्धान हो गया तथा गोपी दूध लेकर वहाँ से चल पड़ी । श्रीभट्टजी ध्यान करके जान गये कि वह गोपी ललिता तथा वह बालक श्रीकृष्ण हैं ॥९३-९९॥



गोपीरूपो मुनिस्तत्र वीणाहस्तो व्यदृश्यत ।
तं दृष्ट्वा गोपिकाः सर्वा एह्येहीत्यब्रुवंस्तदा ॥१०२॥
उपवीणय देवेशं श्रीराधारमणं प्रभुम् ।
कृतांजलिपुटो भट्टो निषसाद तदाज्ञया ।
तदोपवीणयामास नारदः स्त्रीवपुर्धरः ॥१०३॥
गोप्यो गानं तदा चक्रुः प्रसन्नो भगवानभूत् ।
वरं ददौ दीक्षिताय पश्य लीलां सदा मम ॥१०४॥
पुनरंतर्दधे सर्वः सकृष्णो रासमण्डलः ।
नारदोऽपि मुनिस्तत्र प्रणम्य जगदीश्वरम् ॥१०५॥
पुनर्जगाम वेगेन ह्युच्चग्रामं निजं ततः ।
एवं बहुविधां लीलां पश्यन् कृष्णस्य नित्यशः ॥१०६॥
दिव्यरूपो मुनिश्रेष्ठो मानुषं रूपमास्थितः ।
लीला नित्या व्रजो नित्यो दिव्यरूपो न संशयः ॥१०७॥
दिव्यदृष्ट्यैव दृश्येत न दृश्यश्चर्मचक्षुषा ।
किंतु प्राकृतदृष्टीनां प्राकृतो दृश्यते नृणाम् ॥१०८॥
कल्पवृक्ष इवैवार्थं नानाश्चर्यप्रदो नृणाम् ।
आचार्यकृपया सर्वैर्यथार्थो दृश्यते व्रजः ॥१०९॥

---

एक समय गोपीरूप धारण कर आप वृन्दावन गये । जहाँ रासलीला होती है तथा जहाँ पर पुरुषों का गमन नहीं है । भट्टजी वीणा हाथ में लेकर बजाते हुए श्रीराधारमणजी की स्तुति करने लगे । उधर गोपियों का गान हो रहा था । श्रीराधारमणजी प्रसन्न होकर उनको वर देने लगे कि-तुम सदा सर्वदा मेरी लीलाओं को देखोगे । ऐसा कह कर श्रीहरि रासमण्डली के साथ अन्तर्द्धान हो गये । भट्टजी ऊँचेग्राम के लिये चल दिये । इस प्रकार दिव्यरूप से वे नित्य लीलाओं का दर्शन करते थे । क्यों कि लीला नित्य हैं, व्रज भी नित्य है, परन्तु दिव्यदृष्टि से उनका अनुभव होता है । चर्मचक्षुः से नहीं है । प्राकृत दृष्टि

आचार्यो हि सदा सेव्यो व्रजदर्शनकांक्षिभिः ।
उपायो नापरो ह्यत्र समीचीनो न संशयः ॥११०॥
अथैको ब्राह्मणो भक्तस्तत्रासीद्वैष्णवो महान् ।
भाषापद्यैः सविविधैः नित्यं स्तौति स्म केशवम् ॥१११॥
सूरदासाह्वयो धीमान् उच्चग्रामे स आगतः ।
ददर्श समुपासीनं व्रजाचार्यं मुनीश्वरम् ॥११२॥
सूरस्तं श्रावयामास कृष्णलीलामयं पदम् ।
श्रीनारायणभट्टं च तुष्टाव प्रीतमानसः ॥११३॥
तमुवाच महाप्राज्ञः श्रीभट्टो ज्ञानिनां वरः ।
कृष्णभक्त प्रसन्नोऽस्मि वरं ब्रूहि ददामि ते ॥११४॥
सूरदासस्तदा प्राह कृतांजलिपुटः शनैः ।
नारदो भगवान् साक्षात् ज्ञातोऽसि मुनिसत्तम ॥११५॥
जगतामुपकाराय मानुषं वपुरास्थितः ।
उपदेशकरो नित्यं कृष्ण एव न संशयः ॥११६॥
आचार्यो भगवान् साक्षादिति मे निश्चिता मतिः ।
विज्ञप्तिं शृणु मे स्वामिन् कृपां कुरु ममोपरि ॥११७॥

---

से प्राकृतरूप दीख पड़ते हैं। वे सब कल्पवृक्ष की भाँति नाना आश्चर्य को देने वाले हैं। आचार्यों की कृपा से यथार्थ स्वरूप का अनुभव होता है। व्रजदर्शन के लिये इच्छुक व्यक्ति नित्य आचार्यों की सेवा करें। इससे अन्य कोई उपाय नहीं है ॥१००-११०॥

अनन्तर महान् वैष्णव, महाभक्त, सूरदास नामक विप्र ऊँचेग्राम में आकर भट्टजी को कृष्णलीलाओं से युक्त पदों को सुनाने लगे तथा भट्टजी को स्तुति करने लगे। भट्टजी ने प्रसन्न होकर कुछ वर माँगने को कहा!! सूरदासजी कहने लगे आप साक्षात् नारदजी हैं, जगत् के उपकारार्थ आये हुए हैं। आचार्य्य भगवत् स्वरूप होते हैं। मेरी एक विज्ञप्ति है कि आप कहिये इस समय श्रीकृष्णचन्द्र कहाँ है? मैं अन्ध



अधुना कृष्णचन्द्रो हि वर्तते कुत्र तद्वद ।
कथं मे दर्शनं भूयाज्जन्मांधस्य जगद्गुरो ॥११८॥
श्रीनारायणभट्टश्च व्रजाचार्य उवाच तम् ।
अधुनैव गतः कृष्णः सखीगिरि-समीपतः ॥११९॥
बरसानुसमीपे हि चारयन् गाः सखानुगैः ।
त्वं गच्छ बरसानुं हि यदि ते दर्शने मनः ॥१२०॥
कियद्दूरेऽधुना मार्गे गोपालस्त्वां मिलिष्यति ।
तच्छ्रुत्वा सूरदासोऽपि नत्वा भट्टं मुनीश्वरम् ॥१२१॥
मार्गं तदैव जग्राह बरसानोर्महामनाः ।
कियद्दूरगतं सूर उच्चग्रामाच्छनैः शनैः ॥१२२॥
शब्दं शुश्राव हेहीति गोपवर्यस्य धावतः ।
तच्छ्रुत्वा सूरदासोऽपि मार्गे स्थित्वा ब्रवीद्वचः ॥१२३॥
हे हि शब्दः कृतः केन मार्गं मे भण्यतामितः ।
गोपालस्तमुवाचेदं सन्मुखे मार्ग एव हि ॥१२४॥
पुनः प्रोवाच तं सूरो हस्तं दत्वा नयस्व माम् ।
अन्धोऽहं नैव पश्यामि मार्गं गर्त्तादिदूषितम् ॥१२५॥
गोपालोऽपि तदागत्य हस्तं दत्वा प्रयत्नतः ।
मार्गे नीत्वा च तं सूरं गच्छस्वेति तदाब्रवीत् ॥१२६॥
तदा तद्धस्तसंस्पर्शात् सूरो जातः सुलोचनः ।
ततो ददर्श गोपालं श्यामसुन्दरविग्रहम् ॥१२७॥

---

हूँ। उनका दर्शन कैसे होगा? भट्टजी कहने लगे कि अभी श्रीकृष्ण सखीगिरि से गोचारण करते हुए सखाओं के साथ बरसाने में गये हैं। तुम कुछ दूर आगे जाओ, वहाँ तुमको मिल जावेंगे। अब विप्र उस मार्ग में जाने लगे। कुछ दूर जाकर आपने बालकों का हि हि शब्द सुना। एक गोपाल को मार्ग पूछने पर गोपाल ने कहा कि आगे रास्ता है। सूर ने कहा मेरे हाथ पकड़ कर ले चलिये। गोपाल हाथ पकड़ कर उस मार्ग

हस्ताद्धस्तं समाकृष्य दुद्राव श्रीहरिस्ततः ।
गावो गच्छन्ति मे चेति प्रोक्त्वा सूरं गिरिं प्रति ॥१२८॥
सूरस्तमनुदुद्राव नैव प्राप कथंचन ।
न च गावस्तु दृश्यन्ते न गोपालोऽपि तत्र हि ॥१२९॥
बरसानौ गतः सूरो गिरिमारूरुहे तदा ।
नैव गावोऽपि दृश्यन्ते चतुर्दिक्षु समंततः ॥१३०॥
पप्रच्छ मनुजान् सूरो गावः कुत्र गता इति ।
गोपालोऽपि गतः कुत्र श्यामसुन्दरविग्रहः ॥१३१॥
जनाः प्रोचुस्तदा तं वै नैव कालो गवामयम् ।
कथं भ्रान्तोऽसि सूर त्वं तव किं दृश्यतेऽधुना ॥१३२॥
सूरदासोऽपि तं ज्ञात्वा गोपालं श्रीहरिं परम् ।
उवाच प्रणयात्तं वै किंचित् कुपितमानसः ॥१३३॥
हस्तमाकृष्य यातोऽसि ज्ञात्वा मां निर्बलं प्रभो ।
हृदयाद्यास्यसे देव पौरुषं गणये तदा ॥१३४॥
त्वां दृष्ट्वा नैव पश्यामि प्राकृतं मानुषं प्रभो ।
अतोऽन्धं कुरु मां देव यथा पूर्वं नमोऽस्तु ते ॥१३५॥

---

में पहुँचाय कर कहने लगा अब जाओ । उस बालक के हस्त स्पर्श से उनके नेत्र खुल गये तथा सूर ने गोपाल को श्यामसुन्दर रूप से देखा । बालक उनके हाथों से अपने हाथ छुड़ा कर "मेरी गाय चली गई मैं जाता हूँ" ऐसा कह कर वह बालक अदृश हो गया । सूरजी पीछे-पीछे भागे परन्तु फिर बालक का दर्शन नहीं मिला । वे बरसाने में जाकर पूछने लगे । सब ने कहा अब गौचारण का समय नहीं है । तुम इस प्रकार भ्रान्त क्यों हो रहे हो ? सूर उस बालक को साक्षात् श्रीहरि जान कर कुछ प्रणय क्रोध के साथ कहने लगे कि दुर्बल मेरे हाथों से हाथ छुड़ाकर चले गये हो, यदि हृदय से चले जाओगे तो तुम्हारे पौरुष को जानूँगा । तुमको मैं प्राकृत मनुष्य नहीं जानता हूँ । तुम तो स्वयं श्री-



इत्युक्त्वा सूरदासोऽपि यथा पूर्वोऽभवद्द्विजः ।
जगे श्रीकृष्णचन्द्रस्य नानालीलामयं पदम् ॥१३६॥
नागाजिर्वैष्णवश्चैको विरक्तानां स चाग्रणीः ।
अन्ये महानुभावाश्च हरिदासादयो परे ॥१३७॥
आगच्छन्ति स्म बहवो वेणीदर्शनकांक्षिणः ।
समाजः सुमहानासीदेकदा देवमन्दिरे ॥१३८॥
तन्मध्ये शुशुभे प्राज्ञः श्रीमद्भास्करनन्दनः ।
बलदेवाग्रतः सर्वे मिलिता ज्ञानिनां वराः ॥१३९॥
चक्रुः सर्वे मिलित्वाथ श्रीकृष्णगुणकीर्त्तनम् ।
दामोदरोऽथ गोस्वामी पुष्पमालादिकं बहु ।
बलदेवप्रसादं स सर्वेभ्यः प्रददौ मुदा ॥१४०॥
मन्दिरे संस्थिताः सर्वे तन्मध्ये दीक्षितः स्थितः ।
गोपालोपि महाप्राज्ञो भट्टो भास्करसंभवः ॥१४१॥
बहवो वैष्णवास्तत्र मन्दिरे समुपागताः ।
प्रपच्छ व्रजमाहात्म्यं कश्चिद्वै वैष्णवोत्तमः ॥१४२॥
कश्चित्पप्रच्छ कृष्णस्य रहस्यं भूमिदुर्लभम् ।
भक्तिमार्गांश्च पप्रच्छ कश्चित् पुष्टिरसादिकान् ॥१४३॥
मर्यादामार्गमेवापि कृष्णभक्तेः पृथक् पृथक् ।
सर्वेषामुत्तरं श्रीमान् ददौ भास्करनन्दनः ॥१४४॥

---

हरि हो । तुमको मेरा नमस्कार है । अब सूरदासजी पहले स्वरूप में आ गये तथा नाना लीलामय पद्यों को गाने लगे ॥१११-१३६ । एक समय महाबिरक्त नागाजी, श्रीहरिदास आदिक वैष्णवगण वेणीदर्शन करने के लिये आये । बलदेवजी के मन्दिर में बड़ा भारी समाज हुआ । सब कोई श्रीकृष्ण के गुण कीर्त्तन करने लगे । दामोदरगोस्वामी ने सबको पुष्पमाला और बलदेवजी का प्रसाद दिया । वहाँ भट्टजी के बड़े भैया गोपालजी मौजूद थे । किसी ने व्रजमहिमा, किसी ने श्रीकृष्ण की

ग्रन्थे भक्तिविवेकाख्ये मार्गाः सर्वे प्रकाशिताः ।
तच्छ्रुत्वा हर्षमापुस्ते तत्रस्था वैष्णवा जनाः ॥१४५॥
कश्चिद्वैष्णवः प्राह श्रीहरिदासं मुदान्वितः ।
गाने त्वं कुशलः सम्यक् पदं श्रावय केशवम् ॥१४६॥
बलदेवं तथा सम्यक् त्वत्समो नापरो भुवि ।
तच्छ्रुत्वा हरिदासोऽपि सर्वेषां शृण्वतां सताम् ॥१४७॥
पदं संश्रावयामास बलदेवं सहानुजम् ।
श्रुत्वा ते वैष्णवाः सर्वे साधु साध्वित्यथाब्रुवन् ॥१४८॥
तं कश्चिद्वैष्णवः प्राह गन्धर्वोऽयं न मानुषः ।
गानमेतादृशं सम्यग् नास्माभिस्तु श्रुतं क्वचित् ॥१४९॥
ततश्च हरिदासोऽपि प्राह भास्करनन्दनम् ।
श्रीमुखादमृतं किंचिच्छ्रोतुमिच्छामहे मुने ॥१४७॥
श्रावितं बलदेवाय यथा ज्ञानं मया पदम् ।
भवाञ्छ्रावयतु श्रीमन् बलदेवाय किंचन ॥१४८॥
तच्छ्रुत्वा दीक्षितः श्रीमान् प्रणम्य श्रीहलायुधम् ।
सप्तस्वरमयीं वीणां जग्राह प्रहसन् विभुः ॥१४९॥
श्रीमद्भागवतं तत्र स तया वीणया जगौ ।
तच्छ्रुत्वा वैष्णवाः सर्वे शिरश्चालनपूर्वकम् ॥१५०॥
धन्य धन्येति ते सर्वे प्रशशंसुर्मुनीश्वरम् ।
आश्चर्यं लेभिरे सर्वे स्थिता ये ब्राह्मणोत्तमाः ॥१५१॥

---

रहस्य बातें, किसी ने भक्तिमार्ग, किसी ने मर्यादा तथा पुष्टिमार्ग को पूछा। भट्टजी ने सबको यथा-योग्य उत्तर दिये। जो कि भक्तिविवेक ग्रंथ में लिखित हैं। किसी वैष्णव ने श्रीहरिदासजी की प्रार्थना की-आप गानविद्या में पण्डित हैं आपके सदृश अधिक और कोई नहीं है। श्रीबलदेवजी को गान सुनाइये। तब श्रीहरिदासजी पद सुनाने लगे, वैष्णवों ने साधु-साधु प्रशंसा की। किसी ने कहा कि आप साक्षात् गन्धर्व हैं म-



कथयन्ति स्म ते सर्वे मनुष्योऽयं न कर्हिचित् ।
ज्ञाने गाने तथा भक्त्या न चास्य सदृशो भुवि ॥१५२॥
दृष्टो वापि श्रुतो वापि मनुष्योऽस्माभिरेव हि ।
अयं तु नारदः श्रीमान् स्वयमास्ते न संशयः ॥१५३॥
अन्यथाऽलौकिकी विद्या कथमस्य भवेदिह ।
हरिदासादयः सर्वे नागाजि-प्रमुखास्तथा ॥१५४॥
परं हर्षं गताः सर्वे श्रुत्वा तृप्तिं न लेभिरे ।
समाप्याथ समाजं ते श्लाघां चक्रुर्मुदान्विताः ॥१५५॥
अहोति हर्षिताः सर्वे वयमत्र समागताः ।
किं किं न प्राप्नुयाज्जीवो हरिदाससमागमे ॥१५६॥
आनन्दं नापरं विद्मः श्रीमद्भागवताद्वयम् ।
तत्रापि भवता श्रीमच्छ्रावितं महदद्भुतम् ॥१५७॥
कथितुं नैव शक्ताः स्म आनन्दोऽभूद्यथा हि नः ।
इत्युक्त्वा गन्तुकामांस्तान् श्रीमद्भास्करनन्दनः ॥१५८॥
विनयात् स्थापयामास बलदेवस्य मन्दिरे ।
कृत्वारात्तिं च देवस्य राजभोगादनन्तरम् ॥१५९॥
सर्वान् संभोजयामास प्रसादं हलधारिणः ।
भुक्त्वा प्रसादं ते सर्वे शशंसुर्वैष्णवोत्तमाः ॥१६०॥
स्वं स्वं स्थानं गतास्तं हि नत्वा भास्करनन्दनम् ।
एवं बहुविधा लीला नारदस्य महात्मनः ॥१६१॥

---

नुष्य नहीं हैं। ऐसा गान हमने कभी नहीं सुना है। अनन्तर हरिदासजी भट्टजी को कुछ सुनाने के लिये प्रार्थना करने लगे। वे सप्तस्वर वीणा लेकर भागवत के पद्यों को गाने लगे। सब कोई विस्मय को प्राप्त होकर कहने लगे-धन्य हैं धन्य हैं आप साक्षात् नारद हैं। श्रीहरिदासजी, नागाजी आदिक परम हर्ष को प्राप्त हुए। राजभोग हुआ, आरती हुई।

कृष्णाज्ञयावतीर्णस्य को वा वक्तुं क्षमः पुमान् ।
एकदा भाद्रकृष्णे तु जन्माष्टम्यां महामतिः ॥१६२॥
लाडिलेयस्य कृष्णस्याभिषेकं कृतवान् मुनिः ।
लाडिलेयस्तदा कृष्णः प्रत्यक्षोऽभूत्परात्परः ॥१६३॥
नन्दगोपादयः सर्वे गोप्यश्च दर्शनं ददुः ।
तद्दृष्ट्वा कृत-कृत्योऽभून्नारदो भट्टरूपधृक् ॥१६४॥
दामोदरश्च गोस्वामी दृष्ट्वा हर्षं जगामह ।
गोपालोऽपि महाप्राज्ञः प्रेमानन्दजलाकुलः ॥१६५॥
दानं ददौ च विप्रेभ्यः उत्सवं च चकारह ।
एवं हि चैत्रशुक्ले च नवम्यां रामरूपधृक् ॥१६६॥
लाडिलेयः स्वभक्ताय दर्शनं दत्तवान् प्रभुः ।
एकदा भाद्रशुक्ले च द्वादश्यां वामनस्य हि ॥१६७॥
जन्मोत्सवं स कृतवान् नारायणः महामतिः ।
दर्शनं दत्तवान् साक्षात्लाड़िलेयः स्वयं प्रभुः ॥१६८॥
नारदाय तदा भूत्वा वामनो भगवान् हरिः ॥१६९॥

---

सब ने भोजन किया तथा प्रशंसा करते हुए अपने-अपने स्थान को चले गये ॥१३७-१६१॥

एक समय भाद्रमास जन्माष्टमी के दिवस मुनिराजजी लाड़िलेयजी का अभिषेक कर रहे थे । उस समय लाड़िलेयजी परिकर के साथ प्रकट हुए । भट्टजी, दामोदरजी, गोपालजी भी बड़े हर्ष को प्राप्त हुए । ब्राह्मणों को दान दिया गया तथा बड़ा भारी उत्सव मनाया गया । इस प्रकार रामनवमी प्रभृति मनाई गईं ॥१६२-१६७॥

एक समय भाद्रशुक्लपक्ष में द्वादशी तिथी में वामनदेवजी का जन्माभिषेक हो रहा था । लाड़िलेय जी वामन स्वरूप होकर दर्शन देने लगे तथा कहने लगे भो भट्ट ! वर माँगो । भट्टजी ने कहा–व्रज का



स्तुतिं कृत्वा तदा भट्टः कृतांजलिपुटः स्थितः ।
तदा श्रीवामनो भट्टं वरं ब्रूहीत्युवाचह ॥१७०॥
अथ तं प्रार्थयामास भट्टो भास्करसंभवः ।
व्रज उद्धारितो देव तवाज्ञा परिपालिता ॥१७१॥
कीर्त्तयन्ति व्रजे सर्वे राधाकृष्णेऽति सर्वदा ।
द्विपंचाशत् ग्रन्थाश्च वचनात्ते मया कृताः ॥१७२॥
श्रीभागवतटीका च लाडिलेय कृता मया ।
रसिकाह्लादिनी नाम यस्यां कृष्णप्रधानता ॥१७३॥
तवैव कृपया स्वामिंस्तव सेवा मया कृता ।
हृदि ध्यानपरो वक्त्रे राधाकृष्णेऽति कीर्त्तयन् ॥१७४॥
तव जन्मदिने देव त्यजेयं मानुषीं तनुम् ।
इत्येव प्रार्थये देव त्वत्तो नान्यं वृणे वरम् ॥१७५॥
लाड़िलेयस्तदा प्राह वामनरूपमास्थितः ।
अत्यन्त-प्रियकृद्भित्यं त्वं मे भक्तोऽसि नारद ।
वियोगं न सहे वत्स भक्तस्याहं हि सर्वदा ॥१७६॥
तथापि मर्त्यलोकोऽयं नास्मिंस्तिष्ठन्ति केचन ।
अतः संवत्सरान्ते हि भविता ते मनोरथः ॥१७७॥
तव वंश-समुद्भूता उच्चग्रामनिवासिनः ।
त्रिवेणीसंस्थिताः सर्वे परं मोक्षं व्रजन्तु ते ॥१७८॥

---

उद्धार तो हो गया । तुम्हारी आज्ञा का पालन भी हुआ । सब कोई राधाकृष्ण का कीर्त्तन कर रहे हैं । मैंने बावन ग्रन्थ आपकी आज्ञा से बनाये । रसिकाल्हादिनी टीका भी बन गई । अब मैं प्रार्थना करता हूँ कि-हृदय में आपका ध्यान तथा मुख में आपका राधाकृष्ण नाम कीर्त्तन करता हुआ आपका इस जन्मदिवस में शरीर त्याग करूँ । लाड़िलेयजी कहने लगे-भक्तविरह अत्यन्त दुःखमय होता है । मैं भक्त का विरह कभी नहीं सहता हूँ । तो भी यह मनुष्य लोक है । आगे के संवत्सर में

सर्वे मोक्षं गमिष्यन्ति भविष्या वंशजाश्च ते ।
इत्युक्त्वा वामनः साक्षात् लाडिलेयो बभूवह ॥१७६॥
अथ संवत्सरे पूर्णे भाद्रे शुक्ले शुभे दिने ।
एकादश्यां महाप्राज्ञो नारदो दीक्षितो विभुः ॥१८०॥
दामोदराय प्रददौ ब्रजाचार्यत्वमात्मनः ।
सर्वे समागतास्तत्र वैष्णवाः संप्रदायिनः ॥१८१॥
सर्वेषां संमतेनैव निजस्थानेऽभिषेचितः ।
नारायणेन स्वेनैव मन्त्रैर्वेदोद्भवैस्तदा ॥१८२॥
दामोदरस्तदा श्रीमान् गादीसंस्थोऽधिकं बभौ ।
अभिषेचुश्च ते सर्वे ब्राह्मणा वैष्णवा मुनिम् ॥१८३॥
दामोदराय ते सर्वे ब्रजभक्ता बलिं ददुः ।
श्रीनारायणभट्टश्च तदा गोस्वामिने प्रभुः ॥१८४॥
दत्वाशीर्वचनं सर्वं शिक्षां तस्मै ददौ स्वयम् ।
ब्रजस्य भक्तिः कर्त्तव्या सेवनीया ब्रजस्य भूः ॥१८५॥
ब्रज एव परं धाम ब्रजः श्रीकृष्णविग्रहः ।
श्रीनन्दनन्दनः कृष्णो ब्रजं त्यक्त्वा न गच्छति ॥१८६॥
स एव चिंतनीयोऽयं श्रीराधा-सहितः सदा ।
बलदेवः सदा सेव्य इष्टदेवः प्रभुर्मम ॥१८७॥

---

तुम्हारी इच्छा पूर्ण होगी । तुम्हारे वंशोत्पन्न, ऊँचेग्रामवासी, त्रिवेणी-स्थित सब कोई परमोक्ष को प्राप्त करेंगे । ऐसा कह कर आप बामनरूप से फिर लाडिलेय स्वरूप हो गये ॥१६८-१७६॥

इस प्रकार एक वर्ष अतीत हो गया । भाद्र शुक्लपक्ष एकादशी तिथी आई । नारद दीक्षितजी ने सबको बुलाया । दामोदरपुत्र को अपनी ब्रजाचार्य्य पदवी दी । दामोदरजी पिता की गद्दी पर बैठने लगे । ब्राह्मण-वैष्णवों ने अभिषेक किया । नारायणभट्टजी उन्हें आशीर्वाद दे कर उपदेश देने लगे-ब्रज की भक्ति तथा ब्रज की सेवा सदा सर्व्वदा करते रहना । ब्रज



मयैव लिखितो यन्त्रः स च सेव्यः प्रयत्नतः ।
( यन्त्रः श्रीनिवगारू प्रभामंडलाख्यः कुलदेवतायन्त्रः )
श्रीकृष्णेन स्वयं दत्तो लाड़िलेयश्च मूर्तिधृक् ॥१८८॥
सेवनीयस्त्वया देवो बलदेवसमीपगः ।
लाड़लीलालयोः सेवा त्वया कार्यातिभक्तितः ॥१८९॥
लीलोत्सवादिकं सर्वं कर्त्तव्यं सर्वदा प्रभोः ।
सेवा सदैव कर्त्तव्या याचनीयं न किञ्चन ॥१९०॥
प्रीतो भवतु देवेश अयमेव परो वरः ।
ग्रन्था विलोकनीया ये सेवायां कथिता मया ॥१९१॥
श्रीमद्भागवतं चापि सेवनीयं पदे पदे ।
सर्वेभ्यो ब्रजभक्तेभ्यः शिक्षणीयं त्वयानघ ॥१९२॥
नारायणाख्यदासस्य वंश्या ये ब्रजमास्थिताः ।
सेवां कुर्वन्तु देवस्य शिक्षणीया त्वया च ते ॥१९३॥
अन्यांश्चापि महाप्राज्ञः स्वशिष्यान् हि तदा प्रभुः ।
आज्ञापयामास मुदा सर्वेषां शृण्वतामिदम् ॥१९४॥

---

परमधाम तथा साक्षात् श्रीकृष्ण विग्रह है । श्रीनन्दनन्दन ब्रज छोड़कर अन्यत्र नहीं जाते हैं ॥१८०-१८६॥

श्रीराधिका के साथ श्रीकृष्ण सर्व्वदा चिन्तनीय हैं ! इष्टदेव-प्रभु बलदेवजी की सर्व्वदा सेवा करना चाहिये । मेरे द्वारा लिखित यन्त्र की नित्य सेवा करना । श्रीकृष्ण ने स्वयं जिस लाडिलेय मूर्त्ति को दी थी उस मूर्त्ति को बलदेवजी के निकट रख कर सर्व्वदा सेवा करते रहना । भक्ति से लाडिलीलाल की सेवा करना । सर्व्वदा लीला-उत्सवादि करते रहें, सेवा भी करते रहें । प्रभु से किसी वस्तु की प्रार्थना नहीं करें । भगवान की प्रसन्नता ही सबसे उत्कृष्ट वर है । सर्व्वदा ग्रन्थावलोकन करते रहना । पद पद में भागवत् की सेवा करें । समस्त ब्रज भक्तों को भी इसका उपदेश सिखाना । नारायणदास के वंशज, अन्य सबको सेवा

दामोदरो हि मन्तव्यो मत्स्थाने सर्वदा प्रभुः ।
अहं दामोदरः साक्षात् मद्रूपोऽयं न संशयः ॥१९५॥
इत्युक्त्वा नारदः श्रीमान् बलदेवं पुनः पुनः ।
प्रदक्षिणी कृत्य मुदा त्रिवेणी-मध्यतः स्थितः ॥१९६॥
सर्वे समास्थिता शिष्या गोस्वामीप्रमुखास्तदा ।
राधाकृष्णेति नामानि कीर्त्तयन्तो मुदान्विताः ॥१९७॥
श्रीभट्टः कृपया तान्वै कृष्णभक्तिं तदादिशत् ।
द्वितीये द्विवसे श्रीमद्वामनस्याभिषेचनम् ॥१९८॥
कृत्वा दामोदरस्तस्य चारार्त्तिं कतवान् प्रभोः ।
श्रीभट्टस्तस्य शिष्याश्च दर्शनार्थं समाययुः ॥
पंचामृतं गृहीत्वैव प्रणम्य शिरसा प्रभुम् ॥१९९॥
पुनस्तत्रागतो भट्टस्त्रिवेणीमध्यमस्थले ।
सर्वतः संस्थिताः सर्वे व्रजभक्ताः समागताः ॥२००॥
दामोदरश्च तत्रैव गोस्वामी सन्मुखे स्थितः ।
श्रीनारायणभट्टश्च कृष्णध्यान-परायणः ॥२०१॥
सर्वेषां पश्यतां तेषां तत्रैवान्तर्दधे प्रभुः ।
दिवि दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ॥२०२॥

---

करें । आप इस प्रकार अन्यशिष्यों को बुलाकर कहने लगे कि दामोदर मेरा रूप है, मेरे स्थान पर विराजित है । उसे मेरे सदृश जानना चाहिये ॥१८७-१९८॥

आप ऐसा कह कर श्रीबलदेवजी को प्रणाम तथा प्रदक्षिण कर त्रिवेणी की बीच में गये । दूसरे दिन दामोदरजी ने वामनजी का अभिषेक किया, आरती भी की । श्रीभट्टजी तथा उनके शिष्य सब दर्शन के लिये आये । भट्टजी पञ्चामृत ग्रहण कर साष्टांग प्रणाम करते हुए फिर त्रिवेणी के बीच मैं आये । उनके चारों ओर से व्रजवासी घिर आए थे । उनके पुत्र दामोदरजी समक्ष में विराजमान थे । भट्टजी श्रीकृष्ण का



धन्य धन्येति च प्रोचुः कृष्ण-कृष्णेति केचन ।
जय जयेति प्राज्ञाः च प्रोचुर्विप्राः समंततः ॥२०३॥
उत्सवं चक्रिरे सर्वे गोस्वामिप्रमुखास्तदा ।
य इदं शृणुयान्नित्यं यश्चापि परिकीर्त्तयेत् ॥२०४॥
कृष्णभक्तिर्भवेत्तस्य नारदस्य प्रसादतः ।
श्रीकृष्णस्यापि भक्तस्य चरितं लोकपावनम् ॥२०४॥
तदेव शृणुते भक्तो नान्य-गाथां कथंचन ।
श्रीमद्भागवते चापि तथैव मुनिभाषितम् ॥२०५॥
तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम् ।
अथवास्य पदांभोजमकरन्दलिहां सताम् ॥२०६॥
किमन्यैरसदालापैरायुषो यदसद्व्ययः ।
इत्यादि बहुधा तत्र प्रमाणं परिकीर्त्तितम् ॥२०७॥
नारायणस्य चरितामृत-सागराच्च
यो वै समुद्धृतमिदं लघुबिन्दुमेतत् ।
भक्त्यापि चेच्च श्रवणांजलिना मनुष्यो
नश्येत तस्य भव-रोगजमाशु दुःखम् ॥२०८॥

---

ध्यान करते हुए अन्तर्द्धान हो गये । कोई २ पुष्पों की वृष्टि करने लगे कोई-कोई जय ध्वनि करने लगे । कोई-कोई वा धन्यवाद देने लगे । आकाशमें दुन्दुभी बजने लगीं, वैष्णवगण महामहोत्सव मनाने लगे । जो कोई पुण्यवान् इस चरित्र का श्रवण तथा कीर्त्तन करेगा उसको नारदजी की कृपा से अवश्य भक्ति मिलेगी । श्रीकृष्ण-भक्त का चरित्र लोकपावनकारी होता है । उसी को सुनना चाहिए अन्य कुछ नहीं सुनना । श्रीभागवत में मुनि ने कहा है यदि श्रीकृष्ण कथायुक्त हो अथवा उनके चरण-कमल मकरन्द के इच्छुक भक्तों का चरित्र हो तो उसे अवश्य कहैं । अन्य असद्वार्त्ता में कुछ नहीं रक्खा है तथा आयु क्षीण हो रही है ॥१९९-२०८॥

---

इति श्रीनारदावतारनारायणभट्टाचार्य्यकुलोद्भवगोस्वामीश्रीरघुनाथात्मज गोस्वामीजानकीप्रसादविरचिते श्रीनारायणभट्टाचार्यचरितामृते पञ्चम आस्वादः ॥५॥



ततः सर्वैं व्रंजस्थैश्च दामोदर उदारधीः ।
गुरुत्वे मानितः साक्षात् पितृसिंहासने स्थितः ॥१॥
तथैव रासलीलां च तथैव मन्दिरोत्सवम् ।
तथैव व्रंजयात्रां च गोस्वाम्यपि चकारह ॥२॥
सर्वे शशंसिरे शिष्याः स्वामिन्दामोदर प्रभो ।
नारायणतनुस्त्वं हि साक्षान्नास्त्यत्र संशयः ॥३॥
दामोदरचरित्राणि सन्त्यनेकानि मानुषैः ।
न शक्यन्ते प्रवक्तुं हि साकल्येन प्रयत्नतः ॥४॥
एका तु गुर्जरी तत्र स्थिता गोमयहारिणी ।
मन्दिरस्य हि या गावस्तासां सेवां चकारह ॥५॥
दामोदरस्य शिष्या सा ह्यु च्चग्रामनिवासिनी ।
गुरोः पादोदकं नित्यं गृह्णती श्रद्धयान्विता ॥६॥

---

उसके अनन्तर उदारमना श्रीदामोदर जी समस्त व्रजवासियों के गुरु रूप करके माने गये तथा पितृ-सिंहासन पर आरूढ़ हुए। गोस्वामी जी वे पहले की भाँति रासलीला, मन्दिरों में उत्सव, ब्रजयात्रा आदि कराने लगे। शिष्य, प्रशिष्य सब उनकी प्रशंसा इस प्रकार करने लगे कि-"हे स्वामिन् ! हे प्रभु दामोदर ! आप नारायणभट्ट जी के साक्षात् अंग स्वरूप हैं इसमें कोई सन्देह नहीं है।" श्रीगोस्वामी दामोदर जी के चरित्र अनन्त हैं। उन्हें मनुष्य अनेक चेष्टा करने पर भी समस्त नहीं कह सकता है ॥१-४॥
एक समय एक गूजरी जो वहाँ वास करती थी, वह नित्य गोबर बीनती थी तथा मन्दिर को गौओं की सेवा करती थी। वह गूजरी नित्य अपने



एकदा तानसेनस्तु सुरागं दीपकं जगौ ।
अतिभीतोऽपि मनसि शासनाच्चक्रवर्त्तिनः ॥७॥
दीपका ज्वलिताः सर्वे स्वेच्छयैव विनानलम् ।
शशंसुस्तानसेनं ते सर्वे राजसभासदः ॥८॥
किंतु तत्तानसेनस्य शरीरेऽग्निः समाविशत् ।
जगर्ह तानसेनश्च राजभृत्यत्वमात्मनः । ९॥
स सम्राजं प्रणम्याशु निर्जगाम पुराद्बहिः ।
नरयानं समास्थाय गच्छन्मार्गे शनैः शनैः ॥१०॥
अकस्मादागतो यत्र स्थिता गोमयहारिणी ।
किशोरी गुर्जरी शिष्या दामोदरगोस्वामिनः ॥११॥
तं दृष्ट्वा गुर्जरी प्राह ह्यत्रैव स्थीयतां त्वया ।
दीपानलेन दग्धोऽसि चिकित्सां ते करोम्यहम् ॥१२॥
इत्युक्त्वा मेघमल्लारं जगौ सा गुर्जरी तदा ।
मेघैराच्छादितं व्योम शीतो वायुर्ववौ तदा ॥१३॥

---

गुरु दामोदरजी के चरणोदक श्रद्धा के साथ ग्रहण करती थी। एक समय तानसेनजी ने चक्रवर्त्ती अकबर का शासन पाकर मन में कुछ भय रखकर दीपक राग का गान किया। उस समय अग्नि के बिना ही दीपक सब जलने लग गये तथा सभासदों ने तानसेन की भारी प्रशंसा की। परन्तु उस समय तानसेन के शरीर में अग्निराशि प्रवेश होने लगी तथा तानसेन अपने को राज-भृत्य करके निन्दा करने लगे। वे मनुष्ययान में बैठकर धीरे-धीरे रास्ता चलते हुए उस गोबर बीनने वाली, दामोदरजी की शिष्या, किशोरी, गूजरी के पास हठात् आय पहुँचे। उनको देखकर उस गूजरी ने कहा-यहाँ ही आप ठहरिये, आप दीपानल में दग्ध प्राय हो गये हैं, मैं आपकी चिकित्सा करूँगी ऐसा कहकर वह मल्हार राग गाने लगी। उस समय आकाश मेघों से आच्छादित हो गया और शीतल पवन बहने लगी। प्रचुर वर्षा इस प्रकार हुई, जिससे

जलं ववर्ष तन्मेघस्तानसेनः शीतलोऽभूत् ।
प्रणम्य भुवि कायेन तानसेनस्तामुवाच ॥१४॥
का त्वं देवि कुतश्चेदं प्राप्तं मन्त्रवलं त्वया ।
सर्वाश्चर्यप्रदं ह्येतन् मेघानामुदयो यतः ॥१५॥
ततस्तं गुर्जरी प्राह नेदं मन्त्रवलं मम ।
दामोदरप्रभावेन सर्वमेतद्बलं मम ॥१६॥
तस्य पादोदकं नित्यं गृह्णत्यत्र वसाम्यहम् ।
गवां सेवां प्रकुर्वाणा नान्यज्जानामि किंचन ॥१७॥
तच्छ्रुत्वा तानसेनश्च परं विस्मयमावह ।
दामोदरप्रभावं च प्रशंशन् गृहमाययौ ॥१८॥
भृगुवंशसमुद्भूतः क्षत्रियो योऽभवत्पुरा ।
उदारबुद्धिर्धर्मात्मा सह ओजो वलान्वितः ॥१९॥
भार्गवस्य प्रसादेन चक्रवर्त्ती बभूवह ।
तस्य वंशे भवद्धीमान् राजपुत्रश्चतुर्भुजः ॥२०॥
नाम्ना सोऽपि महाबुद्धिः सर्वधर्मभृतांवरः ।
यशस्वी भुवि विख्यातो महाशीलो महाबलः ॥२१॥

---

तानसेन स्नान कर शीतल हो गये। आप शरीर से पृथ्वी प्रणाम कर उसको कहने लगे-तुम कौन हो कहाँ से यहाँ आई हो। बड़ी आश्चर्य्य की बात है, कि असमय मेघों की वर्षा हुई। गूजरी ने कहा-यह मेरा बल-प्रभाव नहीं है। गुरु दामोदरजी के प्रभाव से यह मेरा प्रभाव है। मैं वहाँ रह कर नित्य उनके चरणोदक का पान करती हुई गौओं की सेवा करती हूँ। मैं इस स्थानको छोड़कर अन्यत्र नहीं जाती हूँ। उसका इस प्रकार वचन सुनकर तानसेनजी परम विस्मय को प्राप्त हुए तथा श्री-दामोदरजी के प्रभाव की प्रशंसा करते हुए अपने घर गये ॥५-१८॥

भृगुवंश में उदारबुद्धि, धर्म्मात्मा, वीर्य्यवान्, बलशील एक क्षत्रिय रहा। वह भार्गवजी के प्रसाद से चक्रवर्त्ती हुआ था। उसके वंश में



अकस्मादागतस्तत्र यत्र दामोदरः स्थितः ।
गोस्वामी व्रजविख्यातो नारायणसमो मुनिः ॥२२॥
तं दृष्ट्वा मुनिमासीनं ग्रहैश्चेन्दुमिवोदितम् ।
शिष्यैः समावृतं साक्षात् पितृसिंहासने स्थितम् ॥२३॥
तं प्रणम्य महाबुद्धिस्तुतिं चक्रे चतुर्भुजः ।
नारायणतनुस्त्वं हि नारायण इवापरः ॥२४॥
गूढं ब्रवीषि धर्मं भोः शिष्येभ्यो गुरुरूपधृक् ।
महिमानं महाप्राज्ञ को वा वक्तुं क्षमो भवेत् ॥२५॥
सुदेवीं त्वां तु जानीमो महतां वाक्यतः प्रभो ।
आचार्यात्मजरूपं हि कृत्वा चात्र स्थितो व्रजे ॥२६॥
व्रजभूमिरहस्यं च प्रकाशयसि नित्यशः ।
अहमप्यागतो ब्रह्मन् पादमूलमुपासितुम् ॥२७॥
शिष्यं मां कुरु ब्रह्मर्षे रहस्यं मे प्रकाशय ।
कृष्णलीलादर्शनं मे यथा भूयान्निरन्तरम् ॥२८॥

---

बुद्धिमान् चतुर्भुज नामक राजपुत्र हुआ। वह महान्बुद्धि वाला, धार्मिक-श्रेष्ठ, यशस्वी, जगविख्यात, महान्शील, महाबली था। महान्-बुद्धि वाला वह अकस्मात् व्रजविख्यात नारायणभट्टजी के समान, गोस्वामी दामोदरजी के पास आया तथा ग्रहों के साथ चन्द्रमा उदय की भाँति शिष्यों के साथ पितृसिंहासन में विराजमान उनको देखकर स्तुति करने लगा कि-आप साक्षात् नारायणभट्ट के शरीर हैं मानो दूसरे नारायण प्रभुजी हैं। आप गुरु रूप धारण कर शिष्यों के लिये गूढ़ धर्म्म को सिखाय रहे हैं। आपकी महिमा को कौन वर्णन करने में समर्थ हो सकता है। महत् पुरुषों के वचनों से "आप सुदेवीजी का अवतार हैं" ऐसा हम जान रहे हैं। हे प्रभो! आप आचार्य्यजी के पुत्र रूप से व्रज में विराजमान हैं। आप नित्य व्रजभूमी का रहस्य प्रकाश कर रहे हैं। हे ब्रह्मन् मैं आपके चरणों की उपासना करने के लिये आया हूँ। हे

गौस्वामी च तदा प्राह शृणु वाक्यं चतुर्भुज ! ।
क्षत्रियाश्च समायाताः नैव शिष्याः मया कृताः ॥२९॥
अतिकोमलमार्गो मे क्षत्रियो दाक्षिणो भवेत् ।
किंतु त्वं न भवेस्तादृक् यथान्यः क्षत्रियः क्षितौ ॥३०॥
कुलं ते सर्वतः ख्यातं भृगुवंशसमुद्भवम् ।
भृगुवंशे समुद्भूतो ह्यहं चापि क्षितीश्वर ॥३१॥
अस्माकं तु सदैवासीद्गुरुत्वं ते कुलस्य च ।
शिष्यो भव महाबुद्धे दीक्षां तुभ्यं ददाम्यहम् ॥३२॥
इत्युक्त्वा तं मुनिः शिष्यं चक्रे भूपं चतुर्भुजम् ।
शिक्षां बहुविधां तस्मै ददौ भक्तिं च केशवे ॥३४॥
श्रीकृष्णः सर्वदा सेव्यो राधा-गोपीसमन्वितः ।
व्रजे भक्तिः सदा कार्या वाङ्मनःकायसंभवा ॥३५॥
तत्वत्रयविचारे तु सदा राजन् स्थिरो भव ।
( जीवतत्वं जगत्तत्वं तत्वमीश्वरसंज्ञकम् ।

महर्षे ! मुझे शिष्य कर रहस्यों को बताइये । जिससे मेरा निरन्तर कृष्ण-लीला का दर्शन हो । श्रीदामोदरगोस्वामीजी कहने लगे हे चतुर्भुज ! मेरा वाक्य सुनो । अनेक क्षत्रिय शिष्य होने के लिये यहाँ आये हैं परन्तु मैंने किसी को शिष्य नहीं किया । मेरा यह मार्ग अत्यन्त कोमल अर्थात् सूक्ष्म है । परन्तु तुम अन्य-क्षत्रिय की तरह नहीं हो । हे राजन् तुम्हारा कुल सर्व्वत्र भृगुवंश उत्पन्न करके प्रसिद्ध है । मैं भी भृगुवंश में उत्पन्न हूँ । तुम्हारे कुल के हम सब सदा सर्वदा गुरु बनते हुए आ रहे हैं । तुम शिष्य हो सकते हो । हे महान्बुद्धि ! मैं तुमको दीक्षा देऊँगा । ऐसा कह कर मुनि ने उस राजा चतुर्भुज को शिष्य किया तथा केशव में नाना प्रकार की भक्ति की शिक्षा दी । श्रीराधिका-गोपियों से सम्वलित श्रीकृष्ण सर्व्वदा ही सेव्य हैं । वाणी, मन, शरीर से व्रज में सर्व्वदा भक्ति करनी चाहिये । हे राजन् तीनों तत्व का विचार



तत्वत्रयमिति प्रोक्तं मुनिभिस्तत्वदर्शिभिः )
स्थूलः सूक्ष्मस्तथा देहो कारणं च ततः परम् ॥३६॥
बन्धनानि त्रयं चैतच्चैतन्यस्य ह्यनादितः ।
स्थूलस्यांतस्तु कालेन जायते नृपसत्तम ॥३७॥
सूक्ष्मदेहस्तु कालेन कारणं च न नश्यति ।
कृष्णभक्ति-प्रभावेन तयोर्नाशो न चान्यथा ॥३८॥
गतोऽपि स्थूलदेहोऽसौ जायते पुनरेव हि ।
छिन्नवृक्षस्य मूलाच्च प्ररोहः संभवेत्यथा ॥३९॥
एवं जीवस्य देहेऽपि नष्टे स्थूले नृपोत्तम ! ।
अनष्टसूक्ष्मदेहत्वात् पुनः स्थूलोऽपि जायते ॥४०॥
मुक्तिं वदन्ति सूक्ष्मस्य नाशे केचिद्विवेकिनः ।
सापि नैव समीचीना मुक्तिर्जीवस्य पार्थिव ॥४१॥
कारणे विद्यमाने तु पुनः सूक्ष्मस्य संभवः ।
किंतूपाधित्रये नष्टे मुख्या मुक्तिस्तदा नृप ॥४२॥

कर स्थिर हो । तत्वदर्शी मुनीश्वरों ने तीन तत्व को माना है-जीवतत्व, जगत्तत्व, तथा ईश्वरतत्व हैं । देह स्थूल, सूक्ष्म तथा कारण रूप से त्रिविध है । अनादिकाल से ये तीनों ही जीव चैतन्य को बान्धते हैं । हे राजश्रेष्ठ ! समय पाकर स्थूलदेह का नाश होता है तथा सूक्ष्मदेह का भी अन्त होता है । परन्तु कारण शरीर का नाश नहीं है । श्रीकृष्णभक्ति प्रभाव से वह भी नाश हो जाता है । उसके नाश होने का अन्य कोई उपाय नहीं है । स्थूल शरीर का नाश हो जाने पर भी छिन्नवृक्ष-मूल से अङ्कुर उत्पन्न की भाँति पुनः देहान्तर का उत्पन्न सम्भव है । स्थूल शरीर का नाश होने पर भी सूक्ष्मदेह रहने के कारण पुनः स्थूलशरीर का उत्पन्न होता है । कोई-कोई विवेकी सूक्ष्मशरीर का नाश होने पर मुक्ति होती है ऐसा कहते हैं । परन्तु वह सिद्धान्त समीचीन नहीं है । हे राजन् ! कारण-शरीर जब तक विद्यमान है तब तक सूक्ष्मशरीर उ-

सूक्ष्मोपाधेश्च नाशे तु हेतुं जानीहि पार्थिव ।
आत्मानात्मविवेकं हि कृत्वा देहद्वयात् पृथक् ॥४३॥
अनुसन्दधत्त आत्मानं मुक्तिं तु प्राप्नुयाज्जनः ।
किंतु तत्रापि सन्देहः कारणस्य भयान्नृप ॥४४॥
अतः कारणनाशे हि विवेकी यतते सदा ।
तत्रोपायसहस्राणामेक एव सुनिश्चितः ॥४५॥
कृष्णभक्तिर्नृपश्रेष्ठ यां मुक्तोपि हि वांछति ।
तत्रापि कारणं वक्ष्ये शृणु राजन् महामते ॥
श्रीकृष्णस्य कथा नित्यं सेवनीया मनीषिभिः ।
तत्रापि कारणं राजन् महत्सङ्गः क्षणे क्षणे ॥४६॥
यत्रोपगीयते नित्यं देवदेवो जनार्द्दनः ।
समीचीनो ह्ययं लोके पन्था पुंसो कुतो भयः ॥४७॥
कर्णे नित्यं कथाश्रावः मुखे श्रीकृष्णकीर्त्तनम् ।
एतत्सर्वं गुरौ भक्त्या पुमान् प्राप्नोति नान्यथा ॥४८॥
पापानां तु फलं राजन् नरकं भृशदारुणम् ।
पुण्यानां च फलं प्रोक्तं स्वर्गलोको मनीषिभिः ॥४९॥'

---

त्पन्न हो सकता है । तीन प्रकार की उपाधी का नाश होने पर ही मुख्या मुक्ति होती है । सूक्ष्म उपाधि के नाश का हेतु आत्मानात्म विवेक माना जाता है । स्थूल-सूक्ष्म दोनों प्रकार देह से पृथक् रूप आत्मा का अनुसन्धान के द्वारा मुक्ति होती है परन्तु उसमें कारण उपाधि विद्यमान रहने के कारण सन्देह रहता है । अतः विवेकीजन कारण शरीर नाश के लिये ही यत्नवान हों । उसके लिये हजारों उपाय कहे गये हैं परन्तु एक ही उपाय का निश्चय किया गया है । वह श्रीकृष्णभक्ति है, जिसको मुक्त पुरुष भी चाहना करता है । तो भी कृष्ण-भक्ति होने का कारण कहता हूँ,हे महान् बुद्धि वाले राजन् सुनो । नित्य श्रीकृष्ण कथा की सेवा करें । क्षण-क्षण में महत्संग करने पर कृष्ण-कथा की सेवा होती



तपसश्च फलं सम्यक् तपो-लोकादि पार्थिव ।
सन्यासस्य फलं ज्ञेयं सत्यलोकं तथैव च ॥५०॥
आत्मज्ञानस्य मुक्तिस्तु पंचधा परिकीर्त्तिता ।
हरिभक्तिफलं राजन् वैकुण्ठं समुदाहृतम् ॥५१॥
(आत्मज्ञानस्येत्यत्र-अन्तर्यामिसहितस्यात्मनो ज्ञानं बोद्धव्यम् न केवलस्य )

तथोक्तं तृतीयस्कन्धे—

सालोक्य-सार्ष्टि-सामीप्य सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥इति॥

षष्ठे च—नारायणपरा राजन् नहि वांछन्ति किंचन ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ।
( अपवर्गो मोक्षः । )

तत्रापि शुद्धभक्तिर्हि यस्य जीवस्य केशवे ।
न स वांछति वैकुण्ठं न मुक्तिं नैव चाशिषः ॥५२॥

(दामोदराष्टके सत्यव्रतवाक्यम्-हरे त्वन्न मोक्षं न मोक्षावधिं वा वान्छे मोक्षावधि वैकुण्ठः ॥ )

---

है । महत्संग में देवदेव जनार्द्दन नित्य गीत होते हैं । इस लोक में यह महत्संग समीचीन मार्ग है जिसमें कोई भय का कारण नहीं है, कर्ण में नित्य श्रीकृष्ण-कथा का श्रवण,मुख में कृष्णकीर्त्तन इन सबका गुरु-भक्ति से मनुष्य प्राप्त होता है । इनसे अतिरिक्त अन्य कोई उपाय नहीं है । "पापों का फल भयानक नरक, पुण्यों का फल स्वर्गलोक" ऐसा पण्डितों ने कहा है । हे राजन् ! इस प्रकार तपस्या का फल तपलोकादि, सन्यास का फल सत्यलोक, तथा पाँच प्रकार की मुक्ति आत्मज्ञान के फल हैं । हरिभक्ति का फल वैकुण्ठ कहा गया है । आत्मज्ञान का तात्पर्य्य यहाँ पर अन्तर्य्यामि के साथ आत्मा का ज्ञान जानना चाहिये । केवल आत्मा का ज्ञान नहीं है । तृतीय स्कन्ध में कहा है-मेरे सेवक-

तद्भक्तेस्तु फलं राजन् कृष्णप्रीतिः सदैव हि ।
दुर्लभा सर्वलोकानां श्रीकृष्णस्य कृपां विना ॥५३॥
पुष्टिमार्गस्य सा भक्तिः यां वांछन्ति मनीषिणः ।
तत्रापि रसमार्गस्य भक्तिरत्यन्तदुर्लभा ॥५४॥
सेवया लभ्यते सा च रसज्ञस्य गुरोः सदा ।
तद्गुरोश्च कृपा चेत्स्यात् श्रीराधापादपंकजे ॥५५॥
तदा भक्तिर्भवेत्शुद्धा रसमार्गप्रवर्तिनी ।
अतो राजंस्त्वया कार्या श्रीराधाकृष्णयोः सदा ॥५६॥
न केवलस्य कृष्णस्य न वियोगस्तयोर्यतः ।
राधाकृष्णौ सदा ध्येयौ गोपीभावेन पार्थिव ॥५७॥
वृन्दावननिकुंजेषु गोपिकापरिवेष्टितौ ।
बलदेवस्त्वया राजन् सदा सेव्यः प्रयत्नतः ॥५८॥
रेवतीसंयुतः साक्षात् श्रीकृष्णस्याग्रजः प्रभुः ।
बले भक्तिं विना राजन् कृष्णस्तुष्येन्न कर्हिचित् ॥५९॥
अतः सदैव कर्त्तव्या बलभद्रे रतिर्नृप ।
प्रसन्ने श्रीबले भक्तो मुक्तिं भुक्तिं च विन्दते ॥६०॥

---

जन केवल मेरी सेवा को छोड़कर अन्य कुछ नहीं ग्रहण करते हैं । वे प्राप्त सालोक्य-सार्ष्टि-सामीप्य-सारूप्य का त्याग करते हैं । षष्ठ स्कन्ध में भी कहा—हे राजन् ! नारायणपरायण सेवा को छोड़कर अन्य कुछ नहीं चाहते हैं । स्वर्ग-अपवर्ग (मोक्ष) नरकादि में उनका समान भाव रहता है तो भी श्रीकेशव में जिसकी शुद्ध भक्ति है वह वैकुण्ठ की भी इच्छा नहीं रखता है, मुक्ति भी नहीं चाहता है । दामोदराष्टक में सत्यव्रत का वचन ऐसा है । पद्मपुराण देखिये । हे देव ! मोक्ष, तथा मोक्षावधि आदि वर नहीं चाहता हूँ । यहाँ पर मोक्षावधि का तात्पर्य वैकुण्ठ है । हे राजन् ! उस भक्ति का फल श्रीकृष्ण प्रीति है । वह समस्त लोकों में दुर्लभ है । केवल श्रीकृष्ण की कृपा से वह मिलती है । वह पुष्टिमार्ग



गोलोके बसतिस्तस्य सेवते यो बलं सदा ।
कदाचित् कुप्यते कृष्णो भक्तेभ्यः कार्यगौरवात् ॥६१॥
बलभद्रो न कुप्येत भक्तेभ्यो भक्तवत्सलः ।
एक रूपं हि जानीहि बलं कृष्णं सदा नृप ॥
इति ते वर्णितं राजन् संक्षेपेन मतं मम ॥६२॥
एतत्समाचरञ्जीवः कृष्णं प्राप्नोति निश्चितम् ।
सर्वभूतेषु राजेन्द्र दयां कुरु महामते ॥६३॥

---

की भक्ति है । जिसको पण्डितगण चाहते हैं । उसमें फिर रसरूपाभक्ति अत्यन्त दुर्लभा है । रसज्ञ गुरु की नित्य-सेवा से ही वह मिलती है । उस प्रकार रसज्ञ गुरु की यदि कृपा होती है तब श्रीराधिका के पादपंकज में रसमार्गप्रवर्त्तिनी शुद्धा-भक्ति होती है । हे राजन् अतः श्रीराधाकृष्ण की सेवा तुमको करनी चाहिये । केवल श्रीकृष्ण की सेवा निषेध है, क्योंकि दोनों का वियोग नहीं है । नित्य गोपीभाव से राधाकृष्ण का ध्यान करना चाहिये । वे दोनों वृन्दावन के निकुंजों में गोपियों से परिवेष्टित हैं । हे राजन् इस प्रकार रेवतीजी के साथ श्रीकृष्णाग्रज, प्रभु, बलदेवजी की सेवा नित्य तुम करो । बलदेवजी की भक्ति के बिना श्रीकृष्ण कभी किसी प्रकार प्रसन्न नहीं होते हैं । अतः सर्व्वदा बलभद्र में रति कर्त्तव्य है । बलभद्र प्रसन्न होने पर मनुष्य मुक्ति भुक्ति का लाभ करते हैं जो नित्य श्रीबलदेवजी की सेवा करता है उसका नित्य गोलोक में अवस्थान होता है । श्रीकृष्ण कभी कार्य्य गौरवता के कारण भक्तों में कोप करते हैं परन्तु भक्तवत्सलबलभद्र कभी कोप नहीं करते हैं । हे राजन् ! श्रीकृष्ण-श्रीबलदेव दोनों को एक रूप जानना । यह मेरा मत है जिसको मैंने संक्षेप में तुमको कहा है । इस मत का आचरण से जीव निश्चय श्रीकृष्ण को प्राप्त करता है । हे महामती वाला राजन् ! सर्व्वभूतों में दया करो । ईश्वर अन्तर्य्यामी रूप में सर्वत्र साक्षात् मौजूद रहते हैं । भक्त के लिये सर्व्वभूत में अवश्य दया रखनी चाहिये ।

अन्तर्यामीश्वरः साक्षात् सर्वत्रैव प्रवर्त्तते ।
दयनीयानि भक्तस्य सर्वभूतानि पार्थिव ॥६४॥
अतिकोमलचित्तस्य न कोऽपि द्वेष्य एवहि ।
अकर्त्तव्यं न कर्त्तव्यं प्राणैः कंठगतैरपि ।
कर्त्तव्यमेव कर्त्तव्यमिति सर्वत्र निर्णयः ॥६५॥
भक्तिरेव हि कर्त्तव्या कर्त्तव्येषु नृपोत्तम ।
अकर्त्तव्येषु ज्ञातव्यं यदाज्ञोल्लंघनं हरेः ।
एतत्ते सर्वमाख्यातं शास्त्रसारं मया नृप ॥६६॥
( कर्त्तव्याकर्त्तव्यविवेकेन षड्विधा शरणागतिर्ध्वनिता )
तथाहि साधनदीपिकायाम्–
आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा ।
आत्मनिक्षेपकार्पण्यये षड्विधा शरणागतिः ॥
आत्मनिक्षेपः विक्रीतपशुवत् तदधीनता
कार्पण्यं तद्दत्तसत्ताकोऽहं न स्वतः समर्थः इति ॥

---

क्योंकि भक्त का हृदय अत्यन्त कोमल होता है। भक्त कभी किसी का द्वेषाचरण नहीं करें। जब तक प्राण कंठ में है तब तक इस नियम का पालन अवश्य करना चाहिये। समस्त कर्त्तव्यों में से भक्ति ही परम कर्तव्य है, भगवान् की आज्ञा का उल्लंघन महान् अकर्त्तव्य जानना चाहिये। यह समस्त शास्त्र का सार उपदेश मैंने तुम से कहा है। कर्तव्य अकर्त्तव्य का विवेक से छै प्रकार की शरणागति ध्वनित हो रही है। पितृचरण ने साधनदीपिका ग्रन्थ में कहा है-आनुकूल्य का संकल्प, प्रातिकूल्य का वर्जन, वे हरि अवश्य रक्षा करेंगे इस प्रकार विश्वास, रक्षकों में उन हरि का वरण करना, आत्म समर्पण, कार्पण्य ये छै प्रकार की शरणागती है। आत्मनिक्षेप का तात्पर्य्य विक्रीत पशु की भाँति उनकी अधीनता, कार्पण्य का अर्थ उनके द्वारा दिया हुआ सत्ता वि-



य एतदाचरेन्नित्यं स कृष्णं प्राप्नुयाद्ध्रुवम् ।
एवं दामोदरः श्रीमान् राज्ञे शिक्षां चकारह ॥६७॥
चतुर्भुजोऽपि राजेन्द्रो गुरोः सेवां चकारह ।
मनसा कर्मणा वाचा शरीरेण त्वहर्निशम् ॥६८॥
इहापि बहूनां राज्ञामधिराजो बभूवह ।
गुरोः प्रसादाद्देहान्ते परं मोक्षं जगाम सः ॥६९॥
तद्वंशे पुरुषाः ख्यातास्चैहानास्ते क्षितीश्वराः ।
गुरुभक्तिरताः सर्वे यशोधर्म-परायणाः ॥७०॥
कृष्णभक्तिरताः शूराः संग्रामेष्वपराङ्मुखाः ।
दानधर्मरताः सर्वे प्रख्याताः पृथिवीतले ॥७१॥
अन्येऽपि बहवः शिष्याः ह्यभवन् धर्मतत्पराः ।
कृष्णभक्तिरताः सर्वे दामोदरगोस्वामिनः ॥७२॥
दामोदरचरित्राणि सत्यनन्तानि मानुषैः ।
न शक्यन्ते प्रवक्तुं हि साकल्येन प्रयत्नतः ॥७३॥

---

शिष्ट मैं हूँ, मेरी स्वयं कोई सत्ता अर्थात् सामर्थ्य नहीं है। जो इन सबका आचरण करता है वह निश्चय श्रीकृष्ण को प्राप्त करता है। इस प्रकार श्रीमान् दामोदरजी राजा के लिये शिक्षा करने लगे। वह चतुर्भुज राजा भी मन-कर्म्म-वाणी-शरीर के द्वारा अहर्निश गुरु की सेवा करने लगा तथा बहु राजाओं का अधीश्वर हुआ। श्रीगुरु के प्रसाद से देहान्त के पश्चात परममोक्ष का प्राप्त किया। उसके वंश में जितने राजा हुए वे सब गुरुभक्तिपरायण, यशोवान् धार्म्मिक, कृष्णभक्तिरत, शूरवीर, संग्राम में अपराङ्मुखी, दानी करके पृथिवी में प्रसिद्ध हुए। श्रीदामोदरजी के और अनेक धर्म्मपरायण, कृष्णभक्तिरत शिष्य हुए। दामोदरजी के चरित्र अनन्त हैं। उनको कोई साकल्यरूप से बर्णन नहीं कर सकता है ॥६९-७३॥

जिस प्रकार मनुष्य कृष्णचरित्र सुधा का पान कर तृप्ति को नहीं

कृष्णचरित्रपीयूषं पिबन् तृप्तिं न याति हि ।
तथा भक्तस्य चरितामृतं बिन्दुं हि मानवः ॥७४॥
य एतच्छृणुयाज्जीवो हरिभक्तस्य कीर्त्तनम् ।
कृष्णभक्तिर्भवेत्तस्य श्रीकृष्णस्य प्रसादतः ॥७५॥
व्रजे वाञ्छति यो भक्तिं स आचार्यं हि सेवयेत् ।
नैवाचार्यप्रसादेन नैव भक्ति र्व्रजे भवेत् ॥७६॥
न कृष्णं प्राप्नुयाज्जीवो विनाचार्यस्य सेवनात् ।
विनाचार्यचरित्राणि साधनं नैव भूतले ॥७७॥
अतः सदैव श्रोतव्यमाचार्यचरितामृतम् ।
यस्मिन्नास्वाद्यमाने तु नान्यत्र स्याद्रुचिः क्वचित् ॥७८॥
श्रीकृष्णचन्द्रस्य पदारविन्दयोराविष्टचित्तं प्रणमामि नारदम् ।
सदेवतीर्थं व्रजमण्डलं च यो द्विजेन्द्ररूपेण समुद्दधार ॥७९॥
श्रीभट्टनारायणनारदस्य तद्वंशजश्रीरघुनाथसूनुः ।
यथामतिः प्राह मुदा चरित्रमाचार्यवर्यस्य यशो विजृम्भितम् ॥८०॥

---

प्राप्त करता है, ठीक उसी प्रकार भक्तचरित्र सुधा सागर के प्राप्त होकर अतृप्त हो "एक बूंद मैंने पाया" ऐसा अनुभव करता है । जो इस हरिभक्त का कीर्त्तन-श्रवण करेगा उस जीव को कृष्णकृपा से अवश्य कृष्णभक्ति होगी । जो भक्ति की इच्छा करता है वह ब्रज में रसज्ञ आचार्य की सेवा करें । बिना आचार्य्य प्रसाद से ब्रज में भक्ति नहीं होती है । बिना आचार्य्य सेवा से जीव श्रीकृष्ण की प्राप्ति नहीं कर सकता है । इस भूतल में आचार्य्य चरित्रों को छोड़ कर अन्य कोई साधन नहीं है अतः सर्व्वदा आचार्य्यचरित्र का श्रवण कर्त्तव्य है । उस आचार्य्यचरित्र सुधा का आस्वादन करने पर अन्यत्र रुचि नहीं होती है । जिन्होंने श्रेष्ठ विप्र रूप से देवता-तीर्थों के साथ ब्रजमण्डल का उद्धार किया है उन श्रीकृष्णचन्द्र के पदारविन्दों में आविष्ट चित्त वाले मुनिराज नारदजी को प्रणाम करता हूँ ॥७४ ७९॥



बहु ग्रन्थावलोकेन ज्ञातं हि चरितं मया ।
आचार्यो नारदः साक्षात् भट्टनारायणः प्रभुः ॥८१॥
तस्मिन्नैवास्ति सन्देहस्तेन यच्चरितं कृतम् ।
अयं कृष्णकला साक्षान्नारदो भगवान् हरिः ॥८२॥
यद्यत् करोति तत्सर्वं को वा वक्तुं क्षमो भवेत् ।
तस्यैव कृपया जीवस्तच्चरित्राणि गायति ॥८३॥
श्रुत्वा भक्तस्य चरितं प्रीतो भवतु केशवः ।
प्रार्थयामि सदा भक्तिं श्रीकृष्णान्नापरं क्वचित् ॥८४॥
हृदये यो ममास्थाय चरितं स्वं जगाद ह ।
तं मुनिं नारदं वन्दे भट्टनारायणाह्वयम् ॥८५॥

इति श्रीनारदावतारनारायणभट्टाचार्य्यकुलोद्भवगोस्वामीश्रीरघुनाथात्मज गोस्वामीजानकीप्रसादविरचिते श्रीनारायणभट्टाचार्यचरितामृते भक्तिप्राधान्यकीर्त्तनं नाम षष्ठास्वादः ॥६॥

॥ इति श्रीनारायणाचार्यचरितामृतं समाप्तम् ॥

श्रीव्रजमण्डले उच्चग्रामे श्रीबलदेवमन्दिरे रचितमिदं बहुग्रन्थ-संदर्शनेन श्रीमदाचार्यकृपया गोस्वामीजानकीप्रसादकृतिरियम् समाप्ता ॥

---

मैंने बहु ग्रन्थ अवलोकन से इस चरित्र को लेखा तथा आचार्य्य श्रीनारायणभट्टजी साक्षात् भगवान् नारद हैं ऐसा जान लिया । इस चरित्र का वर्णन में मेरा कोई भ्रम वा सन्देह नहीं है । श्रीकृष्णविभूति स्वरूप साक्षात् भगवान् श्रीहरि नारदजी जो जो लीला करते हैं उन सब का कौन मनुष्य वर्णन करने में समर्थ हो सकता है ! केवल उनकी कृपा से ही जीव उनके चरित्रों का गान कर सकता है । भक्त के चरित्र का श्रवण कर श्रीकेशव प्रसन्न हों । मैं नित्य श्रीहरि से भक्ति के बिना अन्य कुछ प्रार्थना नहीं करता हूँ । जिन्होंने मेरे हृदय में विराजमान होकर अपने चरित्र का गान किया है उन भट्टनारायण नामक मुनिवर नारदजी की मैं बन्दना करता हूँ ॥८०-८५॥ (अनुवादक-कृष्णदास)

आप "रासलीलानुकरण आविष्कार" विषय का खोज में है। आप लिखते हैं कि मैंने एक पत्र लिखा था, उसका भी उत्तर नहीं मिला। मैं आपसे पूर्णरूप से सम्मत हूँ कि श्रीनारायणभट्ट जी रासलीला के आचार्य्य हैं। सब प्राप्त प्रमाणों तथा साक्ष्यों का अध्ययन करके मैं निश्चित निष्कर्ष पर पहुँचा हूँ और अपनी पुस्तक में मैंने यही लिख भी दिया हैं।"

(५०) ठौर ठौर रास के बिलास लै प्रगट किये, जिये यौं रसिकजन कोटि सुख पाये हैं। (भक्तमाल के टीकाकार प्रियादासजी)

(५१) श्रीनारायणभट्टजी रासलीलानुकरण के मूल आचार्य्य हैं इस विषय में "(लघु) श्रीनारायणभट्टचरितामृत" में कहा है—यह भी एक प्रामाणिक अत्यन्त सुन्दर ग्रन्थ है। उक्त ग्रन्थ हमारे पास मौजूद है। आगे इसका प्रकाशन करने की इच्छा है।

पुनरेको द्विजः प्राप्तो भट्टनारायणाश्रमम्।
मन्त्रं गृहीत्वा तं प्रीह आज्ञां देहि मम प्रभो ! ॥
प्रसन्नो भगवानाह मदुक्तं कुरु पुत्रक !
राधाकृष्णविहाराणि त्वया कार्य्याणि निश्चितं ॥
इत्युक्त्वा मुकुटं दत्वा करहलपुरवासिनम्।
कृष्णलीलाविहाराणि कारयामास वै मुनिः ॥
अद्यापि ब्रजभूमौ ते गुरोः स्वामिपदं गताः।
तद्वंश्यास्तत्र स्थाने तु कृष्णलीलाः रचन्ति वै ॥

(५२) तत्रैव-तीर्थोद्धार बारे में कहा है:-

यानि स्थितानि भगवच्चरणादिचिन्हा-
न्यधिश्रितानि सदनानि च मण्डलानि।
श्रीवज्रनाभकृतमूर्त्तिकदम्बकानि
कृत्स्नानि तानि स सुधी प्रकटीचकार ॥

(क्रमशः)

------------